# अथ शुक्लयजुःप्रातिशाख्यम्

## प्रथमोऽध्यायः

जपादौ नाधिकारोऽस्ति सम्यक्पाठमजानतः
प्रातिशाख्यमतो ज्ञेयं सम्यक्पाठस्य सिद्धये

स्वरसंस्कारयोश्छन्दसि नियमः १
लौकिकानामर्थपूर्वकत्वात् २
न समत्वात् ३
स्याद्वाम्नायधर्मित्वाच्छन्दसि नियमः ४
यत्तन्न ५
वायुः खात् ६
शब्दस्तत् ७
सङ्करोप ८
स सङ्घातादीन् वाक् ९
त्रीणि स्थानानि १०
द्वे करणे ११
शरीरात् १२
शरीरम् १३
शरीरे १४
तेषां समूहात् स उदयँस्त्रैकाल्यम् १५
ओंकारः स्वाध्यायादौ १६
ओंकाराथकारौ १७
ओंकारं वेदेषु १८
अथकारं भाष्येषु १९
प्रयतः २०
शुचौ २१
इष्टम् २२
ऋतुं प्राप्य २३

योजनान्न परम् २४
भोजनं मधुरं स्निग्धम् २५
वर्णदोषविवेकार्थम् २६
तिङ्कृत्तद्धितचतुष्टयसमासाः शब्दमयम् २७
तां वाचमोंकारं पृच्छामः २८
अथ शिक्षा विहिताः २९
सवनक्रमेणोरःकण्ठभ्रूमध्यानि ३०
आयाममार्दवाभिघाताः ३१
उच्चनीचविशेषः ३२
अथाख्याः समाम्नायाधिकाः प्राग्रिफितात् ३३
उपदिष्टा वर्णाः ३४
अन्त्याद्वर्णात् पूर्व उपधा ३५
निर्देश इतिना ३६
कारेण च ३७
अव्यवहितेन व्यञ्जनस्य ३८
र एफेन च ३९
स्वैरैपि ४०
नानुस्वारयमविसर्जनीयजिह्वामूलीयोपध्मानीयाः ४१
दन्त्यस्य मूर्द्धन्यापत्तिर्नतिः ४२
समानस्थानकरणास्यप्रयत्नः सवर्णः ४३
सिमादितोऽष्टौ स्वराणाम् ४४
सन्ध्यक्षरं परम् ४५
अकण्ठ्यो भावी ४६
व्यञ्जनं कादि ४७
अनन्तरं संयोगः ४८
स्पर्शेष्वेव संख्या ४९
द्वौ द्वौ प्रथमौ जित् ५०
ऊष्माणश्च हवर्जम् ५१
मुच्च ५२
धि शेषः ५३

द्वितीयचतुर्थाः सोष्माणः ५४
अमात्रस्वरो ह्रस्वः ५५
मात्रा च ५६
द्विस्तावान् दीर्घः ५७
प्लुतस्त्रिः ५८
व्यञ्जनमर्धमात्रा ५९
तदर्धमणु ६०
परमाण्वर्धाणुमात्रा ६१
स्थाने ६२
ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात् ६३
प्रथमग्रहणे वर्गम् ६४
ऋॅक्कौ जिह्वामूले ६५
इचशेयास्तालौ ६६
षटौ मूर्धनि ६७
रो दन्तमूले ६८
लृलसिता दन्ते ६९
उवोॅप्पा ओष्ठे ७०
अहविसर्जनीयाः कण्ठे ७१
सवर्णवच्च ७२
ऐकारौकारयोः कण्ठ्या पूर्वा मात्रा ताल्वोष्ट्योरुत्तरा ७३
यमानुस्वारनासिक्यानां नासिके ७४
मुखनासिकाकरणोऽनुनासिकः ७५
दन्त्या जिह्वाग्रकरणाः ७६
रश्च ७७
मूर्द्धन्याः प्रतिवेष्ट्याग्रम् ७८
तालुस्थाना मध्येन ७९
समानस्थानकरणा नासिक्यौष्ठ्याः ८०
वो दन्ताग्रैः ८१
नासिकामूलेन यमाः ८२
जिह्वामूलीयानुस्वारा हनुमूलेन ८३

कण्ठ्या मध्येन ८४
प्रथमोत्तमाः पदान्तीया अचऔ ८५
विसर्जनीयः ८६
स्वराश्च लृकारवर्जम् ८७
णकारकारावग्रहे ८८
अनुनासिकाश्चोत्तमाः ८९
स्पर्शान्तस्य स्थानकरणविमोक्षः ९०
अवसाने च ९१
प्रगृह्यम् ९२
एकारेकारोकारा द्विवचनान्ताः ९३
ओकारश्च पदान्तेऽनवग्रहः ९४
उकारोऽपृक्तः ९५
चमू अस्मे त्वे ९६
मे उदात्तम् ९७
अमी पदम् ९८
स्वरोऽक्षरम् ९९
सहाद्यैर्व्यञ्जनैः १००
उत्तरैश्चावसितैः १०१
संयोगादिः पूर्वस्य १०२
यमश्च १०३
क्रमजं च १०४
तस्माच्चोत्तरं स्पर्शे १०५
अवसितं च १०६
व्यञ्जनं स्वरेण सस्वरम् १०७
उच्चैरुदात्तः १०८
नीचैरनुदात्तः १०९
उभयवान् स्वरितः ११०
एकपदे नीचपूर्वः सयवो जात्यः १११
उदात्तादयः परे सप्त ११२
त्रयो नीचस्वरपराः ११३

एदोद्भ्यामकारो लुगभिनिहितः ११४
युवर्णौ यवौ क्षैप्रः ११५
इवर्ण उभयतोह्रस्वः प्रश्लिष्टः ११६
स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः ११७
उदवग्रहस्तैरोविरामः ११८
विवृत्तिलक्षणः पादवृत्तः ११९
उदाद्यन्तो न्यवग्रहस्ताथाभाव्यः १२०
हस्तेन ते १२१
चत्वारस्तिर्यक् स्वरिताः १२२
अनुदात्तं चेत्पूर्वं तिर्यङ् निहत्य काण्वस्य १२३
ऋजुं निहत्य प्रणिहन्यन्त उदात्ते १२४
तीक्ष्णोऽभिनिहितः परम्परं मृदुस्त्वन्यः १२५
तस्यादित उदात्तं स्वरार्धमात्रम् १२६
सप्त १२७
त्रीन् १२८
द्वौ १२९
एकम् १३०
सामजपन्यूङ्खवर्जम् १३१
प्रावचनो वा यजुषि १३२
तमिति विकारः १३३
तस्मिन्निति निर्दिष्टे पूर्वस्य १३४
तस्मादित्युत्तरस्यादेः १३५
षष्ठी स्थानेयोगा १३६
तेनेत्यागमः १३७
अन्तरेण पर्वणी १३८
पर एकस्मात् १३९
उभयोर्विकारः १४०
वर्णस्यादर्शनं लोपः १४१
विकारी यथासन्नम् १४२
संख्यातानामनुदेशो ययासंख्यम् १४३

सन्निकृष्टविप्रकृष्टयोः सन्निकृष्टस्य १४४
पूर्वोत्तरयोरुत्तरस्य १४५
द्विरुक्तमाम्रेडितं पदम् १४६
संहितं स्थितोपस्थितम् १४७
संहितावदवग्रहः स्वरविधौ परं च सर्वं चेदनुदात्तम् १४८
इतिपरस्तिर्यङ्नीचोऽन्तोदात्ते मध्योदात्ते पर्वणि काण्वस्य वा १४९
उदात्तमयोऽन्यत्र नीच एव १५०
एकवर्णं पदमपृक्तम् १५१
स एवादिरन्तश्च १५२
अवग्रहः पदान्तवत् १४३
न त्वितिकरणम् १५४
पूर्वेणोत्तरः संहितः १५५
पदविच्छेदोऽसंहितः १५६
एकपदद्विपदत्रिपदचतुष्पदानेकपदाः पादाः १५७
वर्णानामेकप्राणयोगः संहिता १५८
विप्रतिषेध उत्तरं बलवदलोपे १५९
विसर्जनीयो रिफितः १६०
करनुदात्तम् १६१
अन्तरनाद्युदात्तम् १६२
अहरभकारपरम् १६३
आवर्वरिति समानर्चि १६४
स्तोतर्वस्तः सनुतरभार्वार्द्धाः १६५
स्वः पदमनरणे १६६
पदादिश्चाजित्परः १६७
ह्वाः सवितः पुनस्त्वष्टर्नेष्टरकर्होतर्मातः प्रातर्जामातरजीगः प्रणेतरिति च १६८
वृद्धं वृद्धिः १६९

इति कात्यायनप्रातिशाख्यसूत्रे प्रथमोऽध्यायः

## द्वितीयोऽध्यायः

स्वरितवर्जमेकोदात्तं पदम् १
अनुदात्तम् २
नो नौ मे मदर्थे त्रिद्व्येकेषु ३
मा च ४
वो वान्ते त्वदर्थे ५
त्वा च ६
पूर्ववाननुदेशः ७
असि ८
यथा गृभोभुवोऽग्निभ्यः ९
गिर्वणः १०
अग्ने घृतेनेति च ११
प्रचिकितश्च १२
एनोऽपापे १३
इहपूर्वं श्रतम् १४
मन्ये पदपूर्वं सर्वत्र १५
वा च कमु चित्समस्माद् घ ह स्म त्व ईम्मर्या अरे स्विन्निपाताश्चेत् १६
पदपूर्वमामन्त्रितमनानार्थेऽपादादौ १७
तेनानन्तरा षष्ठ्येकपदवत् १८
न पृथिवि देवयजन्योषध्या देव भूरेः पवित्रपते पवित्रपूतस्यापान्नृणां नृपते सोमाग्नेः सोमेन्द्रस्य सोम सुवीर्यस्य सोम विश्वेषां देवानां प्रजापते यस्य यस्य देवाग्ने तवाग्ने वाजस्याग्ने वरुणस्यापो अस्माकम् १९
सुमङ्गल सत्यराजन्विकिरिद्र विलोहित दरिद्र नीललोहित श्रेयस्कर भूयस्कराम्बे अम्बिकेऽम्बालिके शरव्ये ब्रह्मसंशिते मरुतो अश्विना यव्ये गव्ये द्यावापृथिवी उरो अग्ना३इ पत्नीवँल्लाजी३ञ्छची३न्मीढुष्टम शिवतम सहस्राक्ष शतेषुधे वसुपते वसुदावन् २०
इडोत्तराणि नव स्वानोत्तराणि षडग्न्युत्तराणि चत्वारि भगोत्तराणि चेन्द्रोत्तरमेकं सिनीवाल्युत्तरं च प्रजापतये ब्रह्मन्निति च २१
भूतिराद्युदात्तम् २२

कदा नरिष्येमपूर्वम् २३
आमन्त्रितं च २४
कृष्णो मृगसंयोगे २५
व्ययवाँश्चान्तः २६
परः प्रधाने २७
मात्रा च परिमाणे २८
दक्षिणा च २९
न दशविश्वकर्मानिषद्येन्द्रस्यपातुसदःसद्भ्येषु ३०
कर्णः स्वाङ्गे ३१
महो नपुंसके ३२
श्रवश्च ३३
अन्धो वीर्ये ३४
एता वर्णे ३५
रोहितश्च केवलः ३६
यन्त्री राट् ३७
ओषधीरनामन्त्रिते ३८
सर्व विश्व मानुषाशाः स्वाहा वाजः पयो नमः ३९
असि शिवा सुषदा पयस्वती यत्ते मधुमतीर्वर्चस्वानोजिष्ठो भ्राजिष्ठः शुष्मि-
णी भद्रवाच्याय वन्द्यो मेध्यो यम आदित्यस्त्रितः सोमेन स्वसेत्येतेषु ४०
धनदारत्नधाम्यां च ४१
रायोऽपोषे ४२
न भागमीशिषयोः ४३
त्रिधा बद्धहितयोः ४४
सुकृतं भूते ४५
द्विरुदात्तानि ४६
बृहस्पतिर्वनस्पतिर्नराशंसस्तनूनप्त्रे तनूनपान्नक्तोषासोषासानक्ता द्यावापृथिवी
द्यावाक्षामा क्रतूदक्षाभ्यामेतवा अन्वेतवा इति च ४७
देवताद्वन्द्वानि चानामन्त्रितानि ४८
इन्द्राबृहस्पतिभ्यामिन्द्राबृहस्पती इति त्रीणि ४९
सर्वमग्रा३इ लाजी३ञ्छाची३निति त्रिमात्राणि च ५०

प्रणवश्च ५१
विवेशा३ इति चानुदात्तम् ५२
आसी३दिति चोत्तरं विचारे ५३
पूर्वमन्तोदात्तम् ५४
द्वन्द्वं चेन्द्रसोमपूर्वं पूषाग्निवायुषु ५५
अग्निश्चेन्द्रे ५६
ऋक्साम्नि च ५७
यतो गतौ ५८
पायोर्विशः ५९
आयुरर्यमोर्वश्यस्तिभ्यः ६०
अस्य रोचनासौबोधा मेपारंपुर एतारोदिवःकोऽहंत्वंमहींय ईशईशानेभ्यः ६१
प्रत्नांयज्ञस्यहविषःपाहीत्पातंमध्वोयजमानस्यहोतुरजरासोलोकेषु च ६२
अनुदात्तमन्यत् ६३
पक्तोर्हंसयोरन्त उदात्त आदिर्वा ६४
वृद्धं वृद्धिः ६५

इति कात्यायनप्रातिशाख्यसूत्रे द्वितीयोऽध्यायः

## तृतीयोऽध्यायः

संहितायाम् १
अर्थः पदम् २
पदान्तपदाद्योः सन्धिः ३
न परकालः पूर्वकाले पुनः ४
ह्यन्तराः कालाः ५
विसर्जनीयः ६
चछयोः शम् ७
तथयोः सम् ८
प्रत्ययसवर्णं मुदि शाकटायनः ९
अविकारं शाकल्यः शषसेषु १०
प्रकृत्या कखयोः पफयोश्च ११
जिह्वामूलीयोपध्मानीयौ शाकटायनः १२

लुङ् मुदि जत्परे १३
उपवसने पीवः १४
स ओषधीमयोः १५
व्यञ्जने च १६
स्य एष च १७
निशब्दो बहुलम् १८
अनितावध्याये १९
इतिवच्चर्चायाम् २०
ककारपकारयोः सकारम् २१
भाव्युपधः षकारम् २२
आविर्निरिड इडाया वसतिर्वरिवः २३
दिवोऽककुत्पृथिव्योः २४
रायः सहसः पोषपुत्रयोः २५
तमसोऽपरस्तात् २६
तपसस्पृथिव्याम् २७
अध्वनो रजसो रिषः स्पृशस्पातौ २८
अध्वनस्कुर्विति च २९
समानपदे च ३०
परावव्सानें ३१
कविःकरत्कृधिषु ३२
कृषीश्च कृधौ सकारम् ३३
सदो द्यौर्नमस्कृतंपितापथेषु ३४
पति तालव्यस्वरोदये ३५
पदे च ३६
न परुषः परुषि ३७
वाजपतिर्वास एदिधिषुरन्तःपर्शव्येनान्तःपार्श्वयमिति च ३८
अहः पतौ रेफम् ३९
परश्च मूर्धन्यम् ४०
स्वर्धूः सांसहयोः ४१
उकारं दुर्दे ४२

नाशे च ४३
पुरो दाशे ४४
अनसो वाहौ सकारो डकारम् ४५
ओकारमितः सिञ्चतौ सोपधः ४६
षड् दशदन्तयोः संख्यावयोऽर्थयोश्च ४७
त आघादनाडम्बरात् ४८
वनसदोऽवेटो रेफेण ४९
पत्यौ च सकारेण ५०
ऋतावरौ च पतिपरयोः ५१
तद्बृहतौ करपत्योस्तलोपश्च ५२
परि कृते षकारेण ५३
चन्द्रे सु शकारेण ५४
दुधुत्तन्धो दकारम् ५५
भाविभ्यः सः षं समानपदे ५६
अनुस्वाराच्च तत्पूर्वात् ५७
करेफाभ्यां च ५८
नेः सीदतेः ५९
ससाद च ६०
ओकारात्सु ६१
ओश्चापृक्तात् ६२
अभेश्च ६३
परेश्च सिञ्चतेः ६४
अभेश्च ६५
अव्यवहितोऽपि ६६
वेर्युदयः ६७
हेर्मिथोदयः ६८
द्यवेश्च ६९
नेः स्त्यास्तनोः ७०
ततद्यौ ७१
अनोः स्तुवनत्याम् ७२

दुःष्वप्न्यम् ७३
वन्दारुर्मार्किः ७४
सहेः पृतनायाः ७५
सधिरंशुरदितिः ७६
वायुरग्निरग्नेरेकाक्षरे ७७
सकारपरे च ७८
मातृभिरर्चिभिः पायुभिर्वरूत्रीः ७९
षात्तथौ मूर्धन्यम् ८०
प्रकृत्या नानापदस्थे तकारे ८१
अनुसन्तनोतु बृहस्पतिसुतस्य सुसमिद्धाय सुसंदृशमभिसत्त्वाभिसंविशन्तु सुसस्या अतिस्थूलं मुसले पत्नीसंयाजान् क्रतुस्थलाञ्जिसक्थो दिविस्पृशा हृदिस्पृशं हिंसीर्ऋक्सामयोर्ऋक्सामाभ्यां तित्तिरिः सीसेन सीसाः सीसं प-शुसनि गोसनिः प्रतिसदृङ् प्रतिसदृक्षासश्चतुस्त्रिंशत् ८२
ऋकाररेफारुदयः ८३
पृथिविदिव्युपरिचर्षणिशकुनियासिभ्यः ८४
ऋषरेभ्यो नकारो णकारं समानपदे ८५
स्वरयवहकपैश्च ८६
निषण्णाय रथवाहणमिन्द्र एणं परिणीयते समिन्द्र ण उरुष्या णो रक्षा णः षू णः षु णः षु णासत्या स्वर्णास्थूरि णौ प्र ण आयूंषि ८७
परि ण इति शाकटायनः ८८
प्र नेतिनुदतिहिनोमीनाम् ८९
प्रकृत्या पदान्तीयः ९०
नि वनि नसः प्रपीनम् ९१
श्रीमना इत्येके ९२
इन्द्राग्नी चित्रभानो वार्त्रघ्नं दुःष्वप्न्यं ध्रुवयोनिः पुरोऽनुवाक्याभिः पुरोऽनुवा-क्याश्चर्मघ्नम् ९३
तवर्गे च ९४
षादनन्तर ऋकारे ९५
शिलिसिवर्गमध्यमव्यवहितोऽपि ९६
दीर्घम् ९७

अश्व रश्मि मति सुमति श्व सुत चारय घृणि सेदिमेन्द्रिय धारय चित्र भङ्गुर वयुनाश्वस्य हृदय घुष्यर्ताभ्यवताध्यर्च शक्ति पुरु शचि वकारे ९८
नाश्वविद्भिररण्यात् ९९
अभि विख्येषंवीरविश्ववत्सवृत्रवाजयन्तेषु १००
अश्वस्य वाजिन इति च १०१
विश्व सहभुवपुषवसुषु १०२
नरहामित्रेषु च १०३
तिष्ठाद्युदात्तम् १०४
प्र वणशृङ्गयासेषु १०५
नि वारहारयोरनवग्रहे १०६
नाव नयामि १०७
धारयाम योजाव सचस्व नुद मो षु जयतोरुष्य रक्ष यज यच्छ मत्सथ पि-पृत गायता तु येन नकारे १०८
भव च १०९
सचावरूथ्यवाजस्यपायुषु च ११०
अपृक्तः सौ १११
रथि तकारनकारयोः ११२
अथोदारिथ शोच पनय सादयर्जु वृष शत्रु सलक्ष्म घाघारात्यृत भवत य-कारे ११३
व वृधवृजोः ११४
अद्य तंहकारचकारभवतवृणीमहेदेवेषु ११५
न होतरि ११६
शृणुतत्विषिध्रजिभवतपिबेतस्मतिष्ठरक्षा मकारे ११७
विश्वदेव्यसोमौ वत्याम् ११८
उष महोभिर्नक्तेमीकारैकारौकारनकारेभ्यः ११९
पूरुषोऽवसाने १२०
पूष्णोजहीमस्तेष्वत्र १२१
नरस्सप्तऋषीन्नस्त आहुर्नियुद्भिष्षु यत्र १२२
अभिमातिपृतनासुसपह्नधूर्विश्वसमत्सुपृतनाव्रातेभ्यः सहेः १२३
उक्थाच्च शसेः १२४

एवाच्छ चकृमाथ १२५
विद्मासौत्रामरायाम् १२६
अधायत्स्मग्नावायुषु १२७
पूर्वो द्वन्द्वेष्ववायुषु १२८
हरि शयेत्येके १२९
पिबा सोमं पिबा सुतस्य स्था मयोभुवो नू रणे शमीष्व मामहानो मामहन्तामशीतम रीरिषो रीरिषत यामयन्ति हि ष्मा ते वर्धया रयिं श्रुधी हवं चरा सोम सूयवसिनी श्रोता ग्रावाणो धर्षा मानुषः पाथा दिवो युद्ध्वा हि गमया तमः सिञ्चता सुतं परीवाप उक्था शस्त्राण्यत्ता हवींष्याच्या जानु द्यामा रेरिहत् द्यामा भिन्दन्तो रुहेमा स्वस्तये जनयथा च धारया मयि तरा मृधो बोधा मे विचृता बन्धमवता हवेषु शृणुधी गिरो रद्मा तोकं चर्षणीसहां चर्षणीधृतो येना समत्सु वनेमा त ऋध्यामा ते शिद्मा सखिभ्यस्तत्रा रथं दीया रथेनेता जयत वर्धया त्वं प्रब्रवामा घृतस्याजगन्था परस्या ररिमा हि पुरीतता प्लीहाकर्णशुण्ठाकर्णौ । प्रकृतिदीर्घावित्येके । नीकाशा अनूकाशेन चक्रा जरसं मिथू कस्तरता सखायः सासह्वानपामार्गोभयादत ऋतीषहमभी षु सुष्टरीमा जुषाणा यजा देवान् येना पावकाश्चायन्तो यदी सरमा स्वदया सुजिह्व निषद्या दधिष्व सदतना रणिष्टन भरा चिकित्वांश्चिकित्सा गविष्टावादददद्द्मा चायुनक् सृजा रराणः सादन्यमिति च १३०
अनुनासिकमुपधा प्रागन्तःस्थायाः १३१
स्वर औपशिविः १३२
अनुस्वारेण व्यञ्जने १३३
नुः १३४
चछयोः शम् १३५
तथयोः सम् १३६
दधन्वान् स्ववान् यकारे लोपम् १३७
रयिवृधे च १३८
नपुंसकादिकारस्य १३९
न सप्तम्यामन्त्रितयोः १४०
नॄन् पकारे विसर्जनीयम् १४१
शत्रून् परिधीन् क्रतून् वनस्पतीन् स्वरे रेफम् १४२

आकारोपधो यकारम् १४३
न तमे १४४
निर्जगन्वान् तमसि १४५
धामञ्शत्रूँश्चिकित्वान् त्वं पूषन्नर्वन्निति च १४६
अश्वादौ चाध्याये १४७
मनुष्याँस्ताँल्लोकानामित्रानुदि १४८
आप्नोतीत्योश्च १४९
संक्रमे च वैष्णवान् १५०
गृहानैमि गृहानुपह्वयामहे वर्चस्वानहं मनुष्यानन्तरिक्षमग्निष्वात्तानृतुमतः पयस्वानग्ने तानश्विना पतङ्गानसन्दितः स्वर्गानपां पतिः सपत्नानिन्द्रः सपत्नानिन्द्राग्नी नभस्वानार्द्रदानुर्विद्वानग्नेर्देवानस्त्रेधतानड्वानाशुरथैतानष्टौ विरूपानालभत एतावान स्यायुष्मानग्ने वायव्यानारारायाः प्रविद्वानग्निनानड्वानधोरामौ शत्रूननु यं यातुधानानस्थादस्मानरिष्टेभिरिति १५१
वृद्धं वृद्धिः १५२

इति कात्यायनप्रातिशाख्यसूत्रे तृतीयोऽध्यायः

## अथ चतुर्थोऽध्यायः

अनुस्वारं रोष्मसु मकारः १
नुश्चान्तःपदेऽरेफे २
अनुनासिका चोपधा ३
लोपं काश्यपशाकटायनौ ४
प्रकृत्या सम्राट्साम्राजि ५
शं चे पकारादुकारोदयात् ६
समन्तःपदे कखपफेष्वनूष्मपरेषु ७
नुश्चाम्रेडिते ८
अन्तःस्थामन्तःस्थास्वनुनासिकां परसस्थानाम् ९
हि १०
स्पर्शे परपञ्चमम् ११
तकारो ले लम् १२
नुश्चानुनासिकम् १३

ङ्नौ क्ताभ्यां सकारे १४
न दाल्भ्यस्य १५
रलावृलृवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र १६
प्रगृह्यं चर्चायामितिना पदेषु १७
रिफितं च संहितायामनिरुक्तम् १८
पदावृत्तौ चान्तरेण १९
क्रमोक्तावृत्तिः पदेषु २०
सुपदावसानवर्जम् २१
अनितावन्तर्विकारागमं प्रागुक्त्वा २२
विश्वपतीवेति च २३
स्वरश्छकारे चकारेण सर्वत्र २४
यस्यातिहाय सहेति न २५
विश्वा ऊष्मान्तं परि द्विषस्त्वं त्वां यदजयो विराजत्यनिरा अवीवृधन् परि-
ष्ठाः सुद्वितय आशा ओषधीराभाह्यमीवा हि मायास्तेऽसीत्येतेषु २६
पृथिव्या स्वरान्तं सम्भव शुक्रो मन्थी पृथिवीं परो देवेभिरित्येतेषु २७
च विश्वा वो ब्रह्म विश्वा हरी युक्तास्ते शफानां जजान नु कमित्येतेष्विमा २८
हवेमोतेमा च २९
विष्णो ते बभूव नासत्या भिषजा न आवोढं या देवा हविषो नो मृडातो नो
अच्छ विमुञ्चेत्येतेषु ता ३०
ता ता च ३१
धिष्णया वरिवोविदं धिष्णया युवमिति च ३२
भाव्युपधश्च रिद्विसर्जनीयः ३३
रेफे लुप्यते दीर्घं चोपधा ३४
रेफं स्वरधौ ३५
कण्ठ्यपूर्वो यकारमरिफितः ३६
लोपं धौ ३७
भूमेश्चाकारेऽपृक्ते ३८
यकाराकारयोर्जास्पत्ये पदे ३९
अलोपो मांस्पचन्याः ४०
सर्वो अःकार ओकारम् ४१

अकारे च ४२
एषो ह च ४३
स्वो रुहावहश्च रात्र्याम् ४४
स्वरे भाव्यन्तःस्थाम् ४५
सन्ध्यक्षरमयवायावम् ४६
उदात्तस्यान्तःस्थीभावे स्वरितं परमनुदात्तम् ४७
कण्ठ्य ऋकारे ह्रस्वम् ४८
अथैकमुत्तरश्च ४९
सिं सवर्णे दीर्घम् ५०
अनुनासिकवत्यनुनासिकम् ५१
कण्ठ्यादिवर्ण एकारम् ५२
उवर्ण ओकारम् ५३
समुद्रस्येमँस्त्वेमँस्त्वोघ्नन्निति च ५४
एजत्योजोरेकेषाम् ५५
संध्यक्षर ऐकारौकारौ ५६
वाहौ च स्वरभूते ५७
आरमृकारोऽपृक्तात् ५८
लृकारश्चाल्कारम् ५९
एदोद्भ्यां पूर्वमकारः ६०
तौ चेदुदात्तावनुदात्ते स्वरितौ ६१
न देशेऽभवति ६२
गाहमानः शिवो भरन्तो द्वेषोभ्यो जम्भयन्तो वाजे वाजजितो मदन्तः शोचे-ऽवसे सुषुवे ज्योते सुपर्णो वीरुधः सुवीरो धातवे सूनवे दूणान आशवो व-हतः संक्रन्दनो बाहवोऽयुध्योऽद्रुहः ६३
वोऽहं सोऽहं सोऽस्माकं तेऽभिगरो वोऽर्वाची ६४
येऽन्नात्रयोः ६५
अविद्यासम्भूत्योश्च ६६
उपस्थेऽन्तस्तेभ्योऽकरम् ६७
नमोऽस्त्वसौत्रामण्याम् ६८
विश्वेऽग्ने विशो रायोऽनग्नौ ६९

सूर्योऽग्नेऽभौ ७०
रिषो यवसे पुरुप्रियोऽन्नपतेऽर्णवे ७१
व्यपरे च ७२
गवे मे मनसो वाजयन्तः सोम्यासः पाशिनो विदानोऽनृते मूजवतो वृष्णे-ऽपाको दीदिवस्त्रयस्त्रिंशे ब्रह्मणे यको रथो विश्वतः पादो वसन्तः ७३
अवोस्त्वग्ने गृहपतेऽभि सत्वानोऽहं नोऽजस्रया विमानोऽजस्रः सुतेऽश्विना नमोऽग्नये तेऽग्रं तेऽग्रे वृक्षस्य प्रथमोऽन्तस्तेऽन्येन ७४
पणयो जहीमोऽम्बिके ७५
नोनुमोऽदुग्धा इव प्रचेतसोऽश्वान्नरोऽस्माकं वृषपाणयोऽश्वाः प्रदिशोऽनूदिते-ऽनागा अन्धसोऽर्चा पनस्यतेऽद्धा यज्ञियेभ्योऽमृतत्वं विपश्चितोऽभि जनोऽन-मीव आयवोऽनु नोऽद्य देशेऽभवद् वयुनेऽजनिष्ट विघ्नापसोऽजायन्त पू-र्व्यासोऽरेणवो नोऽश्मा नोऽदितिर्नोऽहिः ७६
ब्राह्मणः ७७
यजुष्षु च ७८
संक्रमे च सर्वत्र ७९
प्रकृतिभाव ऋक्षु ८०
जुषाणश्चानध्वनि ८१
ते चानुदात्तमनुदात्ते ८२
हेड आपो गुवोऽपाग्ने धीरासो देवास उरो रक्षा णो मो वैश्वानरो वृषभो व-चः प्राण उदानोऽङ्ग इमा मे वृष्णो दशमास्योऽन्ध आवित्तोऽरिष्टो अर्जुनः प्र-त्याश्रावः स्विष्टो घासे प्रणीतस्तेभ्यो नमो अस्तु दूरे नो अद्य यज्ञे सधस्थे नो अध्वरायेन्द्रे हिरण्यपर्णो द्वारो देवोऽब्दो रथिभ्यो महद्भ्यः संसदः ८३
छन्दो अङ्कुपमङ्काङ्कमस्त्रीवयः ८४
का ध्रुवोती सदना होतारा ज्या स्वधा पृथिवी प्रतिमेमसदन्नश्यामाकर्मोध्व-मियमवस्तादुतास्तिषु ८५
प्रगृह्यं स्वरे ८६
न रोदसीमे ८७
विश्पतीवोपस्थिते ८८
उकारोऽपृक्तोऽस्पर्शात् ८९
प्लुतमितौ ९०

ओकारश्च ९१
उकारोऽपृक्तो दीर्घमनुनासिकम् ९२
इतेश्च परं पदं चर्चायाम् ९३
तकारवर्गश्चकारवर्गे चकारवर्गम् ९४
शकारे च ९५
परश्चास्पर्शपरश्छम् ९६
उदः स्तभाने लोपम् ९७
अश्वात् स्थे तकारं संज्ञायाम् ९८
स्वरात् संयोगादिर्द्विरुच्यते सर्वत्र ९९
परं तु रेफहकाराभ्याम् १००
ऊष्मान्तःस्थाभ्यश्च स्पर्शः १०१
जिह्वामूलीयोपध्मानीयाभ्यां च १०२
यैस्तु परं तैर्न पूर्वम् १०३
नास्वरपूर्वा ऊष्मान्तःस्थाः १०४
विसर्जनीयाद् व्यञ्जनपरः १०५
ङनौ चेद् ध्रस्वपूर्वौ स्वरे पदान्तौ १०६
संयोगपूर्वव्यञ्जनान्तावसानगताः स्वरा द्विमात्राः १०७
प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थाः १०८
नानुस्वारः १०९
सवर्णे ११०
ऋवर्णे १११
लृवर्णे ११२
यमे ११३
विसर्जनीयः ११४
स्ववर्गीये चानुत्तमे ११५
अवसितं च ११६
नान्तःपदे स्वरपञ्चमान्तःस्थासु ११७
स्पर्शोऽपञ्चमः स्वरधौ तृतीयम् ११८
जिति प्रथमम् ११९
असस्थाने मुदि द्वितीयं शौनकस्य १२०

पञ्चमे पञ्चमम् १२१
हश्च तस्मात् पूर्वचतुर्थम् १२२
नकारपरो जातूकर्ण्यस्य १२३
हि १२४
यवयोः पदान्तयोः स्वरमध्ये लोपः १२५
न वकारस्यासस्थान एकेषाम् १२६
असौ च शाकटायनः १२७
प्रउगमिति यकारलोपः १२८
अनादेशेऽविकारः १२९
प्रागुवर्णादक्षराणामेकीभावः १३०
स्वरितवान् स्वरितः १३१
उदात्तवानुदात्तः १३२
इवर्णमुभयतोह्रस्वमुदात्तपूर्वमनुदात्तपरं स्वरितम् १३३
वीक्षितायेति च १३४
उदात्ताच्चानुदात्तं स्वरितम् १३५
निहितमुदात्तस्वरितपरम् १३६
अनवग्रहे १३७
स्वरितस्य चोत्तरो देशः प्रणिहन्यते १३८
स्वरितात्परमनुदात्तमुदात्तमयम् १३९
अनेकमपि १४०
नोदात्तस्वरितोदयम् १४१
द्विवर्णमेकवर्णवद्धारणात् स्वरमध्ये समानपदे १४२
ऐकारौकारौ च १४३
डढौ ळळ्हावेकेषाम् १४४
द्विसकारं शास्स्व रास्स्वेति १४५
ऋलृवर्णौ रेफलकारौ संश्लिष्टावश्रुतिधरावेकवर्णौ १४६
मात्रार्धमात्राणुमात्रा वर्णापत्तीनाम् १४७
अनुस्वारो ह्रस्वपूर्वोऽध्यर्धमात्रा पूर्वा चार्धमात्रा १४८
दीर्घादर्धमात्रा पूर्वा चाध्यर्धा १४९
द्वियकारम् १५०

आप्यायमानो यमो रय्यै धाय्यारूपं श्रवाय्यं नृपाय्यं पौरुषेय्या हृदय्याय सह रय्या निचाय्य सान्नाय्य सन्ताय्येति च १५१
एकः १५२
ज्योतिश्च्यवनः श्येनः श्यामं श्यामाकाः श्येतो ज्येष्ठो ज्योग् ज्या च्छ्यति १५३
जुषस्व यविष्ठ्य शोचा यविष्ठ्येति च १५४
स्येति णयत्वं च १५५
स्वरपूर्वाश्च शचजाः समानपदे द्विरुक्ताः १५६
व्यञ्जनपराश्च न १५७
कश्यपस्यानार्षेये जातूकर्ण्यस्य १५८
उच्चैरञ्जुमञ्जानश्च १५९
मर्त्तो वुरीत मर्त्तेष्वग्निः परो मर्त्तस्ते मर्त्त इति च १६०
अन्तःपदेऽपञ्चमः पञ्चमेषु विच्छेदम् १६१
ऊष्मभ्यः पञ्चमेषु यमापत्तिर्दोषः १६२
स्फोटनं च ककारवर्गे वा स्पर्शात् १६३
स्वरात् स्वरे समानपदे जो यं न तु ऋकारे १६४
ख्यातेः खयौ कशौ गार्ग्यः सख्योरुख्यमुख्यवर्जम् १६५
त्रिपदाद्यावर्तमाने संक्रमः १६६
द्विपदैकपदान्यप्यनुवाके १६७
अनन्तरे १६८
अपराङ्गे १६९
अस्वरविकारे १७०
अलिङ्गविकारे १७१
असमाने १७२
त्रिरावृत्ते १७३
गूढे १७४
पदसमूहे १७५
संहितायां च १७६
अवसानार्थं पुनर्ग्रहणम् १७७
अविकारार्थं च १७८

उत्सर्गश्च १७९
क्रमः स्मृतिप्रयोजनः १८०
द्वे द्वे पदे सन्दधात्युत्तरेणोत्तरमावसानादपृक्तवर्जम् १८१
अपृक्तमध्यानि त्रीणि स त्रिक्रमः १८२
पुनराकारेणोत्तरम् १८३
मोषूणाभीषुणौ च १८४
चत्वार्यपृक्तपूर्वे नकारपरे सौ १८५
मकारपरे चैके १८६
पुनः सुपदेनोत्तरम् १८७
पूर्वस्योत्तरसंहितस्य स्थितोपस्थितमवगृह्यस्य १८८
सुपदे शाकटायनः १८९
अन्तःपददीर्घीभावे १९०
विनामे १९१
प्रगृह्ये १९२
रिफियेऽनिरुक्ते १९३
अवसाने च १९४
यथासमाम्नातं क्रमावसानं संक्रमेषु १९५
वृद्धं वृद्धिः १९६

इति कात्यायनप्रातिशाख्यसूत्रे चतुर्थोऽध्यायः

अथ पञ्चमोऽध्यायः

समासेऽवग्रहो ह्रस्वसमकालः १
तरतमयोश्चातिशयेऽदक्षिणप्रत्यासङ्गे २
वीतमहूतमसूतमगोपातमरत्नधातमवसुधातमाः पूर्वेण ३
सर्वदेवजनेभ्यश्च ४
तूणवध्ममुत्तरेण ५
रायस्पोषदे विजावेति च ६
बहुप्रकृतावागन्तुना पर्वणा ७
तद्वति तद्धिते न्यायसंहितं चेत् ८
शस्त्वं त्रातातिषु च ९

धात्वर्थे यकारे स्वरपूर्वे १०
वांसौ च भूतकाले स्वरेण ह्रस्वादनुषि ११
प्रत्नपूर्वविश्वेमर्तुभ्यस्था १२
ह्रस्वव्यञ्जनाभ्यां भकारादौ विभक्तिप्रत्यये १३
स्विति चानतौ १४
वर्णसङ्ख्येऽन्यतरतः १५
अनुदात्तोपसर्गे चाख्याते १६
गिरि त्रशयोः १७
इवकाराम्रेडितायनेषु च १८
एकात्समीची १९
त्वायवः शंयोर्बहिर्धास्मयुं मृन्मयीं सुम्नयाशुया साधुया धृष्णुया विशाल-
मनुया २०
मृगयुमुभयादतोऽपामार्गकिम्पूरुषमिति च २१
पारावतानाग्निमारुताश्चेति जातूकर्ण्यस्य २२
अधीवासमित्येके २३
प्रतिषेधेनानवग्रहः २४
उत्तरेण चाकारेण २५
द्वापूर्वम् २६
संख्यापूर्वश्च धा २७
द्वन्द्वानि द्विवचनान्तानि स्वरान्तपूर्वपदानि २८
तद्धिते चैकाक्षरवृद्धावनिहिते २९
अञ्चतिसहत्योः कृल्लोपे ३०
अनुरुसुभ्याम् ३१
समिदाभ्यां वत्सरः ३२
प्राग्निभ्यामनिन्धौ प्रश्लेषे ३३
पाङ्त्रानुद्द्रोऽभ्राय संशयात् ३४
जनयत्या ओषधयो वृषायिषत नहि चनास्मभ्यमजावयो वलगम् ३५
समानोऽनश्वमेधे ३६
वायुरसजातः समुद्रमहोरात्रे विश्वानरो विश्वाहाग्रयणोऽसपत्ना गोधा गोधूमा
आशुशुक्षणिर्न्यग्रोधः पुरोडाशः प्रावर्णेभिरशीतम तस्करा मस्मसाश्वत्थ उप-

स्तिर्माकिर्विश्वामित्रो गोपां प्रउगमङ्गानि कक्षीवन्तमदधात्पवीरवन्नीहारेण प्रावृता घनाघन ईदृङ् चान्यादृङ् शूघनासः कुयवं कुचरः प्रियङ्गवो नीवारो एकादश षोडश चन्द्रमा आयुवो व्याघ्रोऽनड्वान् गविष्ठिरः कपर्दिने पुलस्तये निषङ्गिणे कुलालेभ्यः कर्मारेभ्यः पुञ्जिष्ठेभ्यो द्वीप्याय नीप्याय किंशिलायैलबृदाः शूकराय शूकृताय चराचरेभ्यः पारावतान् गोलत्तिकाखुरजगरो विपन्यवो दाक्षायणा आयुधं सुरामं बृहस्पतिर्वनस्पतिर्नराशंसः सुरभिर्नरिष्ठायै ३७

उत्तम्भनादीन्यादिसंशयात् ३८

विशौजा इत्यन्यायसमासात् ३९

दित्यौही तुर्यौही पष्ठौही हृदयौपशेनेति च ४०

दुष्टरो विष्टरो विष्टपो विष्टम्भो विष्टम्भनीम् ४१

ऊवध्यमुगणा उख इष्कृतिरिष्कर्तारमुदरमित्युपसर्गैकदेशलोपात् ४२

सँस्कृतं सँस्कृतिर्माँस्पचन्याः पुँश्चलूमित्यनुनासिकोपधत्वात् ४३

अनुस्वारागमत्वादित्येके ४४

परीत्तोऽवत्तानां सुविताय सग्धिरिति च ४५

वृद्धं वृद्धिः ४६

इति कात्यायनप्रातिशाख्यसूत्रे पञ्चमोऽध्यायः

## अथ षष्ठोऽध्यायः

अनुदात्तमाख्यातमामन्त्रितवत् १

उयसर्ग उपसर्गे २

आम्रेडिते चोत्तरः ३

कृदाख्यातयोश्चोदात्तयोः ४

नाभ्येकाक्षरश्च स्वरसन्धेयेऽकृति ५

आ पूतजातयोः ६

अधि नि प्र प्रति श्रितात्रिणं भानवःपचतेषु ७

उज्जेषमावर्त आपनीफणत् संसनिष्यदत् संवतं प्रयाणं संचरन्तं संरभध्वं प्रसितिं विक्रमस्वेत्येतेष्वनु ८

आोप प्रोदात्ते ९

अभिप्रेह्युपसंप्रयात प्रत्यातनुष्वासुषाव १०

प्रकृत्याख्यातमाख्यातपूर्वम् ११
उदात्ताच्चामन्त्रितादनन्तरम् १२
एकान्तरादपि १३
यद्वृत्तोपपदाच्च १४
हेश्च १५
उत्तरेऽपि १६
नेत् १७
समनसस्करत् १८
द्वयोः पूर्वं समुच्चये १९
वा विचारणे २०
अह विनियोगे २१
एवावधारणे २२
उपपदाप्रयोगेऽपि च २३
परोपापाव प्रति पर्यन्वप्यत्यध्याङ् प्र सं निर्दुरुन्नि वि स्वभि २४
द्विस्पर्शम् २५
वेत्तु वित्त्वास्मद्द्र्यक् पात्रमधि त्त्यम् मृत्तिका द्ध्वं दात्रं समाववर्त्त्यृद्धि-
रराद्ध्या अर्द्धशुद्धबुद्ध नक्त्कं निषण्णस्विन्नान्नसन्नाश्च २६
न ह्ववृचिश्विसतयेभ्यस्त्रैकम् २७
इध्यायवार्ध्रीनसोद्राश्चराश्चेत् २८
उपोत्स्थित उत्त्तम्भनमुत्त्तभानोत्स्थायोत्स्थितायेति त्रीणि २९
बर्हिरङ्ङ्क्ताम् भद्रेण पृङ्ङ्क्तं पङ्ङ्क्तिः समङ्ङ्धि परिवृङ्ङ्धि
पाङ्ङ्त्रानिति द्वावनुनासिकौ पूर्वावारपन्तीवर्जमिति ३०
वृद्धं वृद्धिः ३१

इति कात्यायनप्रातिशाख्यसूत्रे षष्ठोऽध्यायः

## अथ सप्तमोऽध्यायः

अथावसानानि १
कण्ठ्यस्वरमेकारेण परिगृह्णीयात् प्लुतवर्जम् २
इवर्णमीकारेण ३
उवर्णं वकारेण ४

औकारं च ५
ह्रस्वकण्ठ्योपधं विसर्जनीयान्तमरिफितं विवृत्त्या ६
दीर्घकण्ठ्योपधं विसर्जनीयान्तमेकारान्तमैकारान्तं प्लुतं प्रगृह्यं च ७
औकारान्तं चैके ८
भाव्युपधरिद्विसर्जनीयान्तानि रेफेण ९
प्रथमान्तं तृतीयेन १०
उत्तमान्तमुत्तमेन ११
वृद्धं वृद्धिः १२

इति कात्यायनप्रातिशाख्यसूत्रे सप्तमोऽध्यायः

अथ अष्टमोऽध्यायः

अथातो वर्णसमाम्नायं व्याख्यास्यामः १
तत्र स्वराः प्रथमम् २
अ इति आ इति आ३ इति ३
इ इति ई इति ई३ इति ४
उ इति ऊ इति ऊ३ इति ५
ऋ इति ॠ इति ॠ३ इति ६
ऌ इति ॡ इति ॡ३ इति ७
अथ सन्ध्यक्षराणि ८
ए इति ए३ इति ९
ओ इति ओ३ इति १०
ऐ इति ऐ३ इति ११
औ इति औ३ इति १२
इति स्वराः १३
अथ व्यञ्जनानि १४
किति खिति गिति घिति ङिति कवर्गः १५
चिति छिति जिति झिति ञिति चवर्गः १६
टिति ठिति डिति ढिति णिति टवर्गः १७
तिति थिति दिति धिति निति तवर्गः १८
पिति फिति बिति भिति मिति पवर्गः १९

इति स्पर्शाः २०
अथान्तःस्थाः २१
यिति रिति लिति विति २२
अथोष्माणः २३
शिति षिति सिति हिति २४
अथायोगवाहाः २५
अः इति विसर्जनीयः २६
ᳵक इति जिह्वामुलीयः २७
ᳶप इत्युपध्मानीयः २८
अं इत्यनुस्वारः २९
हुँ इति नासिक्यः ३०
कुँ खुँ गुँ घुँ इति यमाः ३१
एते पञ्चषष्टिबर्णा ब्रह्मराशिरात्मा वाचः ३२
यत्किञ्चिद्वाङ्मयं लोके सर्वमत्र प्रयुज्यते ३३
शुचिना ३४
शुचौ देशे ३५
शूद्रपतितयोरसंश्रावं स्वाध्यायोऽध्येतव्यः ३६
ज्ञाने ३७
पौरुष्यम् ३८
स्वर्ग्यम् ३९
यशस्यम् ४०
आयुष्यम् ४१
अथापि भवति ४२
वेदस्यलध्ययनाद् धर्मः संप्रदानात्तथा श्रुतेः ।
वर्णशोऽक्षरशो ज्ञानाद्विभक्तिपदशोऽपि च ४३
त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः ।
द्विचत्वारिंशद् व्यञ्जनान्येतावान्वर्णसंग्रहः ४४
तस्मिन् ळव्हजिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम्
४५
लृकारो दीर्घः प्लुताश्चोक्तवर्जम् ४६

अथ वर्णदेवताः ४७
आग्नेयाः कण्ठ्याः ४८
नैर्ऋत्या जिह्वामूलीयाः ४९
सौम्यास्तालव्याः ५०
रौद्रा दन्त्याः ५१
ओष्ठ्या आश्विनाः ५२
वायव्या मूर्धन्याः ५३
शेषा वैश्वदेवाः ५४
तत्समुदायोऽक्षरम् ५५
वर्णो वा ५६
अक्षरसमुदायः पदम् ५७
अक्षरं वा ५८
तच्चतुर्धा ५९
नामाख्यातोपसर्गनिपाताः ६०
तत्र प्रतिविशेषः ६१
क्रियावाचकमाख्यातमुपसर्गो विशेषकृत ।
सत्त्वाभिधायकं नाम निपातः पादपूरणः ६२
चतुर्दश निपाता येऽनुदात्तास्तेऽपि सञ्चिताः ।
निहन्यते खल्वाख्यानमुपसर्गाणां चतुष्टये ६३
अथ पदगोत्रानि ६४
भारद्वाजकमाख्यातं भार्गवं नाम भाष्यते ।
वासिष्ट उपसर्गस्तु निपातः काश्यपः स्मृतः ६५
अथ पददेवताः ६६
सर्वं तु सौम्यमाख्यातं नाम वायव्यमिष्यते
आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः ६७
इत्याह स्वरसंस्कारप्रतिष्ठापयिता भगवान् कात्यायनः ६८
वृद्धं वृद्धिः ६९ ४

इति कात्यायनप्रातिशाख्यसूत्रेऽष्टमोऽध्यायः